इमां दशरथस्य त्वं प्रतिमां किं न पृच्छसि ।
येन राज्यं च प्राणाश्च स्त्रीशुल्कार्थं विसर्जिताः ॥८॥

**भरतः** । हा तात । मूर्छितः पतन् पुनः प्रत्यागत्य ।

हृदय भव सकामं यत्कृते शङ्कसे त्वं
शृणु पितृनिधनं तद् गच्छ धैर्यं च तावत् ।
स्पृशति तु यदि नीचो मामयं शुल्कशब्द-
स्त्वथ च भवति सत्यं तत्र, देहो विशोध्यः ॥७॥

**देवकुलिकः** आत्मगतम् । इक्ष्वाकुकुलालापः खल्वयम् । प्रकाशम् । कच्चिद् दशरथपुत्रो भरतो भवान् ।

**भरतः** । अथ किम् ।

**देवकुलिकः** । तेन ह्यापृच्छे भवन्तम् ।

**भरतः** । आर्य, तिष्ठ, शेषमभिधीयताम् ।

**देवकुलिकः** । का गतिः । श्रूयताम् । सीतालक्ष्मणसहायो रामो वनं गतः ।

**भरतः** । कथम् । आर्योऽपि वनं गतः । मोहमुपगच्छति ।

**देवकुलिकः** । कुमार, समाश्वसिहि, समाश्वसिहि ।

**भरतः** समाश्वस्य ।

अयोध्या ह्यटवीभूता पित्रा भ्रात्रा च वर्जिता ।
पिपासार्तोऽनुधावामि तामतोयां नदीमिव ॥१०॥

आर्य, विस्तरश्रवणं मे मनसः स्थैर्यमुत्पादयति । तत् सर्वमनवशेषमभिधीयताम् ।

**देवकुलिकः ।** श्रूयताम् । तत्रभवता राज्ञाभिषिच्यमाने रामे भवतो जनन्याभिहितं किल—

**भरतः ।** तिष्ठ ।

तं स्मृत्वा शुल्कदोषं भवतु मम सुतो राजेत्यभिहितं
तद्धैर्येणाश्वसत्या व्रज सुत वनमित्यार्योऽप्यभिहितः ।
तं दृष्ट्वाबद्धचीरं निधनमसदृशं राजा ननु गतः
पात्यन्ते धिक्प्रलापा अथ मयि सदृशाः प्रकृतिभिः ॥११॥

मोहमुपगच्छति ।

नेपथ्ये । उस्सरह, अज्जा, उस्सरह ॥ उत्सरत, आर्याः, उत्सरत ।

**देवकुलिकः** विलोक्य । अये,

कालेे खल्वागता देव्यः पुत्रे मोहमुपागते ।
हस्तस्पर्शो हि मातॄणामजलस्य जलाञ्जलिः ॥१२॥

ततः प्रविशन्ति देव्यः सुमन्त्रश्च ।

**सुमन्त्रः ।** इत इतो भवत्यः ।

इदं गृहं तत् प्रतिमानृपस्य नः
समुच्छ्रयो यस्य स हर्म्यदुर्लभः ।
अयन्त्रितैरप्रतिहारमागतै–
र्विना प्रणामं पथिकैरुपास्यते ॥१३॥

अन्तः प्रविश्यावलोक्य च । भवत्यः, न खलु न खलु प्रवेष्टव्यम् ।

अयं हि पतितः कोऽपि वयःस्थ इव पार्थिव ।

**देवकुलिकः ।**

परशङ्कामलं कर्तुं कुमारो भरतो ह्ययम् ॥१४॥

निष्क्रान्तो देवकुलिकः ।

**देव्यः ।** सहसोपगम्य । हा जाद भरद ॥ हा जात भरत ।

**भरतः ।** किञ्चित् समाश्वस्य । आर्य,

**सुमन्त्रः ।** अहो स्वरसादृश्यम् । मन्ये प्रतिमास्थो महाराजो व्याहरतीति ।

**भरतः ।** अथ मातृणामिदानीं कावस्था ।

**देव्यः ।** जाद, जाद । हस्तेन शरीरं परामृशन्ति ॥ जात, जात ।

**सुमन्त्रः ।** भवत्यः, निगृह्यतामुत्कण्ठा ।

**भरतः ।** नेत्रे उन्मील्य । महाराजसंनिकर्षस्तु मां सूचयति । कच्चित् तातसुमन्त्रो भवान् ।

**सुमन्त्रः ।** अथ किम् । सुमन्त्रोऽस्मि ।

अन्वास्यमानश्चिरजीविदोषैः
कृतघ्नभावेन च विडम्ब्यमानः ।
अहं हि तस्मिन् नृपतौ विपन्ने
जीवामि शून्यस्य रथस्य सूतः ॥१५॥

इयं तत्रभवतो रामस्य जननी देवी कौशल्या ।

**भरतः** । अम्ब, अनपराद्धो भरतोऽहमभिवादये ।

**कौशल्या** । जाद, णिस्संतावो होहि ॥ जात, निःसंतापो भव ।

**भरतः** । अनुगृहीतोऽस्मि ।

**सुमन्त्रः** । इयं तत्रभवतो लक्ष्मणस्य जननी देवी सुमित्रा ।

**भरतः** । अम्ब, लक्ष्मणेनातिसंधितो भरतोऽहमभिवादये ।

**सुमित्रा** । जाद, जसोभाई होहि ॥ जात, यशोभागी भव ।

**भरतः** । अनुगृहीतोऽस्मि ।

**सुमन्त्रः** । इयं ते जननी–

**भरतः** सरोषम् । आः पापे,

मम मातुश्च मातुश्च मध्यस्था त्वं न शोभसे ।
गङ्गायमुनयोर्मध्ये कुनदीव प्रवेशिता ॥१६॥

**कैकेयी** । जाद, किं मए किदं ॥ जात, किं मया कृतम् ।

**भरतः** । किं कृतमिति वदसि ।

वयमयशसा चीरेणार्यो नृपो गृहमृत्युना
प्रततरुदितैः कृत्स्नायोध्या मृगैः सह लक्ष्मणः ।
दयिततनये शोकेनाम्बे स्नुषाध्वपरिश्रमै–
र्धिगिति वचसा चोग्रेणात्मा त्वया ननु योजिताः ॥१७॥

**कौशल्या ।** जाद, सव्वसमुदाआरमज्झत्थो किं ण वन्दसि मादरं ।। जात, सर्वसमुदाचारमध्यस्थः किं न वन्दसे मातरम् ।

**भरतः ।** अम्ब, युवां मेऽम्बे अभिवादिते ।

**कौशल्या ।** एव्वं । परं इअं ते जणणी-।। एवम् । परमियं ते जननी-।

**भरतः ।** इयं मे जनन्यासीत् पुरा, न त्विदानीम् । पश्यतु भवती ।

त्यक्त्वा स्नेहं शीलसंक्रान्तदोषैः
पुत्रास्तावन्नन्वपुत्राः क्रियन्ते ।
लोकेऽपूर्वं स्थापयाम्येष धर्मं
भर्तृद्रोहादस्तु माताप्यमाता ।।१८।।

**कैकेयी ।** जाद, महाराअस्स सच्चवअणं रक्खन्तीए मए तह उत्तं ।। जात, महाराजस्य सत्यवचनं रक्षन्त्या मया तथोक्तम् ।

**भरतः ।** किमिति ।

**कैकेयी ।** पुत्तओ भरदो राआ होदुत्ति ।। पुत्रको भरतो राजा भवत्विति ।

**भरतः ।** अथ स आर्यः

पितुर्मे नौरसः पुत्रो न क्रमेणाभिषिच्यते ।
दयिता भ्रातरो न स्युः प्रकृतीनां न रोचते ।।१९।।

**कैकेयी ।** जाद, सुक्कसंधा णं पुच्छिदव्वा ।। जात, शुल्कसंधा ननु प्रष्टव्या ।

**भरतः ।**

वल्कलैर्हृतराज्यश्रीः पदातिः सह भार्यया ।
वनवासं त्वयाज्ञप्तः शुल्केऽप्येतदुदाहृतम् ॥२०॥

**कैकेयी ।** जाद, काले णिवेदइस्सामि॥ जात, काले निवेदयिष्यामि।

**भरतः ।**

अयशसि यदि लोभः कीर्तयित्वा किमस्मान्
नृपपदफलतर्षश्चेन्नृपः किं न दद्यात् ।
अथ तु नृपतिमातेत्येष शब्दस्तवेष्टो
वद तु भवति सत्यं किं तवार्यो न पुत्रः ॥२१॥

दुष्टं कृतं भवत्या ।

त्वया राज्यैषिण्या नृपतिरसुमुक्तो न गणितः
सुतं ज्येष्ठं च त्वं व्रज वनमिति प्रेषितवती ।
न शीर्णं यद् दृष्ट्वा जनकतनयां वल्कलवती-
महो धात्रा सृष्टं भवति हृदयं वज्रकठिनम् ॥२२॥

ततश्चेटी प्रविश्य सुमन्त्रस्य कर्णे किमपि कथयित्वा निर्गता ।

**सुमन्त्रः ।** कुमार, अत्रभवन्तौ वसिष्ठवामदेवौ सह प्रकृतिभिर-भिषेकं पुरस्कृत्य भवन्तं विज्ञापयतः ।

गोपहीना यथा गावो विलयं यान्त्यपालिताः ।
एवं नृपतिहीना हि विलयं यान्ति वै प्रजाः ॥२३॥

**भरतः ।** अनुगच्छन्तु मां प्रकृतयः ।

**सुमन्त्रः ।** क्व भवान् यास्यति ।

**भरतः ।**

तत्र यास्यामि यत्रासौ वर्तते बान्धवप्रियः ।
नायोध्या तं विनायोध्या सायोध्या यत्र राघवः ॥२४॥

निष्क्रान्ताः सर्वे ।

## इति प्रतिमादर्शनं नाम तृतीयोऽङ्कः ।

ततः प्रविशतश्चेट्यौ ।

**विजया ।** हला णन्दिणिए अज्ज कोसल्लापुरोएहि सव्वेहि अन्तेउरेहि पडिमागिहं गदेहिं तहिं किल भट्टिदारओ भरदो दिट्ठो ॥
हला नन्दिनिके, अद्य कौशल्यापुरोगैः सर्वैरन्तःपुरैः प्रतिमागृहं गतैस्तत्र किल भर्तृदारको भरतो दृष्टः ।

**नन्दिनिका ।** हला दिट्ठो ॥ हला, दृष्टः ।

**विजया ।** तदा भट्टिणी कुमारेण किं भणिदा ॥ तदा भट्टिनी कुमारेण किं भणिता ।

**नन्दिनिका ।** किं भणिदा । णं आलोइदुं वि णेच्छिदा कुमारेण ॥
कि भणिता । नन्वालोकयितुमपि नेच्छिता कुमारेण ।

**विजया ।** अहो अच्चाहिदं । रज्जलुद्धाए भट्टिदारअस्स रामस्स विभट्ठं करन्तीए भट्टिणीए अत्तणो वेहव्वं आदिट्ठं । लोओ वि विणासं गमिओ ॥ अहो अत्याहितम् । राज्यलुब्धया भर्तृदारकस्य रामस्य विभ्रष्टं कुर्वत्या भट्टिन्यात्मनो वैधव्यमादिष्टम् । लोकोऽपि विनाशं गमितः ।

**नन्दिनिका ।** हला, सुणाहि । पइदिहि आणादिं अहिसेअं उव-

सज्जिअ रामतवोवणं गदो कुमारो ।। हला, शृणु। प्रकृतिभिरानीतमभिषेक-मुपसृज्य रामतपोवनं गतः कुमारः ।

**विजया ।** एव्वं, गदो कुमारो । णन्दिणिए, एहि । अह्मे भट्टिणिं पेक्खामो ।। एवम् , गतः कुमारः। नन्दिनिके, एहि । आवां भट्टिनीं पश्यावः ।

निष्क्रान्ते चेट्यौ ।

## इति द्वितीयः प्रवेशकः ।

ततः प्रविशन्ति रथेन भरतः सुमन्त्रः सूतश्च ।

**भरतः ।**

स्वर्गं गते नरपतौ सुकृतानुयात्रे
पौरैः सुताश्रुसलिलैरनुगम्यमानः ।
द्रष्टुं प्रयाम्यकृपणेषु तपोवनेषु
रामाभिधानमपरं जगतः शशाङ्कम् ॥ १ ॥

**सूतः ।** आत्मगतम् । एष आयुष्मान् भरतः

दैत्येन्द्रमानमथनस्य नृपस्य पुत्रो
यज्ञोपयुक्तविभवस्य तथा प्रपुत्रः ।
भ्राता पितुः प्रियकरस्य जगत्प्रियस्य
रामस्य रामसदृशेन पथा प्रयाति ॥ २ ॥

**भरतः ।** भोस्तात,

कासौ नरपतेः पुत्रः कासौ सत्यमनुव्रतः ।
मम मातुः प्रियं कर्तुं येन लक्ष्मीर्विसर्जिता ॥ ३ ॥

**सुमन्त्रः ।** कुमार, एतस्मिन्नाश्रमपदे ।

अत्र रामश्च सीता च लक्ष्मणश्च महायशाः ।

**भरतः ।** तेन हि स्थाप्यतां रथः ।

**सूतः ।** यदाज्ञापयत्यायुष्मान् । रथं स्थापयति । सर्वे रथादवतरन्ति ।

**भरतः ।** सूत, एकान्ते विश्रामयाश्वान् ।

**सूतः ।** यदाज्ञापयत्यायुष्मान् । निष्क्रान्तः ।

**भरतः ।** भोस्तात, निवेद्यताम् ।

**सुमन्त्रः ।** कुमार, किं निवेद्यते ।

**भरतः ।** राज्यलुब्धायाः कैकेय्याः पुत्रः प्राप्त इति ।

**सुमन्त्रः ।** कुमार, अलं गुरुजनापवादमभिधातुम् ।

**भरतः ।** सुष्ठु, न न्याय्यं परदोषमभिधातुम् । तेन ह्युच्यतामिक्ष्वाकुकुलव्यङ्गभूतो भरतो दर्शनमभिलषतीति ।

**सुमन्त्रः ।** कुमार, नाहमेवं वक्तुं समर्थः । अथ भरतः प्राप्त इति ब्रूयाम् ।

**भरतः ।** नैवम् । नाम केवलमभिधीयमानमकृतप्रायश्चित्तमिव मां प्रतिपादयति । तस्मात्, तिष्ठतु तातः, अहमेव निवेदयिष्ये । भो भो निवेद्यतां तत्रभवते पितृवचनकराय राघवाय ।

निर्घृणश्च कृतघ्नश्च प्राकृतः प्रियसाहसः ।
भक्तिमानागतः कश्चित् कथं तिष्ठतु यातु वा ॥ ५ ॥

ततः प्रविशति रामः सीतालक्ष्मणाभ्याम् ।

**रामः** आकर्ण्य सहर्षम्। सौमित्रे, अपि शृणोषि स्वरमिमम् ।

कस्यासौ सदृशतरः पितुः स्वरेण
गाम्भीर्यात् परिभवतीव मेघनादम् ।
यः कुर्वन् मम हृदयस्य बन्धुशङ्कां
सस्नेहः श्रुतिपथमिष्टतः प्रविष्टः ॥ ६ ॥

**लक्ष्मणः ।** आर्य, ममापि खल्वेष स्वरसंयोगो बन्धुजनबहुमानमावहति । एष हि

घनः स्पष्टो धीरः समदवृषभस्निग्धमधुरः
कलः कण्ठे वक्षस्यनुपहतसंचाररभसः ।
यथास्थानं प्राप्तः स्फुटकरणनानाक्षरतया
चतुर्णां वर्णानामभयमिव दातुं व्यवसितः ॥ ७ ॥

**रामः ।** सर्वथा नायमबान्धवस्य स्वरसंयोगः । क्लेदयत्येष मे हृदयम् । वत्स लक्ष्मण, दृश्यतां तावत् ।

**लक्ष्मणः ।** यदाज्ञापयत्यार्यः । परिक्रामति ।

**भरतः ।** अये, न कश्चित् प्रतिवचनं प्रयच्छति । किंनु विज्ञातोऽस्मि कैकेय्याः पुत्रो भरतः प्राप्त इति ।

**लक्ष्मणः** द्वारमुपगम्य । अये, अयमार्यो रामः । नहि, रूपसादृश्यम् । वत्सो भरतोऽयम् । एष तातः सुमन्त्रः ।

**सुमन्त्रः** । अये, कुमारो लक्ष्मणः ।

**भरतः** । एवम्, गुरुरयम् । आर्य, अभिवादये ।

**लक्ष्मणः** । एहि, वत्स । स्वस्ति । आयुष्मान् भव ।

**भरतः** । अनुगृहीतोऽस्मि ।

**लक्ष्मणः** । कुमार, तिष्ठ, त्वदागमनमार्याय निवेदयामि । रामसुपगम्य । आर्य,

अयं ते दयितो भ्राता भरतो भ्रातृवत्सलः ।
संक्रान्तं यत्र ते रूपमादर्श इव तिष्ठति ॥ ११ ॥

**सीता** । अज्जउत्त, किं भरदो आअदो ॥ आर्यपुत्र किं भरत आगतः ।

**रामः** । अथ किम् । आत्मगतम् । हन्त,

कीदृशस्तनयस्नेहो भ्रातृस्नेहो यदीदृशः ।
अद्य खल्ववगच्छामि पित्रा मे दुष्करं कृतम् ॥१२॥

**लक्ष्मणः** । आर्य, किं प्रविशतु कुमारः ।

**रामः** । वत्स लक्ष्मण, इदानीमपि तावदस्मदभिप्रायमनुवर्तितुमिच्छसि । गच्छ, सत्कृत्य शीघ्रं प्रवेशय कुमारम् ।

**लक्ष्मणः** । यदाज्ञापयत्यार्यः ।

**रामः** । अथ वा तिष्ठ त्वम् ।

इयं स्वयं गच्छतु मान्महेतो-

मर्तेव भावं तनये निवेश्य ।
तुषारपूर्णोत्पलपत्रनेत्रा
हर्षास्त्रमासारमिवोत्सृजन्ती ॥१३॥

**सीता ।** जं अज्जउत्तो आणवेदि । उत्थाय परिक्रम्य भरतमवलोक्य । हं, तदो तव्वेलं तदाणिं णिक्कन्तो अज्जउत्तो । णहि, रूअसादिस्सं । वच्छो भरदो एसो ॥ यदार्यपुत्र आज्ञापयति ।.........। आम्, ततस्तद्वेलं तदानीं निष्क्रान्त आर्यपुत्रः । नहि, रूपसादृश्यम् । वत्सो भरत एषः ।

**सुमन्त्रः ।** अये, वधूः ।

**भरतः ।** अये, इयमत्रभवती जनकराजपुत्री ।

इदं तत् स्त्रीमयं तेजो जातं क्षेत्रोदराद्धलात् ।
जनकस्य नृपेन्द्रस्य तपसः सन्निदर्शनम् ॥१४॥

आर्य, अभिवादये भरतोऽहम् ।

**सीता** आत्मगतम् । णहि रूवं एव्व, सरसंजोओ वि सो एव्व । प्रकाशम् । वच्छ, चिरं जीव ॥ नहि रूपमेव, स्वरसंयोगोऽपि स एव ।...वत्स चिरं जीव ।

**भरतः ।** अनुगृहीतोऽस्मि ।

**सीता ।** एहि, वच्छ, भादुणो मणोरहं पूरेहि ॥ एहि, वत्स, भ्रातुर्मनोरथं पूरय ।

**सुमन्त्रः** । प्रविशतु कुमारः ।

**भरतः** । तात, इदानीं किं करिष्यसि ।

**सुमन्त्रः** ।

अहं पश्चात् प्रवेक्ष्यामि, स्वर्गं याते नराधिपे ।
विदितार्थस्य रामस्य तवैतत् पूर्वदर्शनम् ॥१५॥

**भरतः** । एवमस्तु । रामसुपगम्य । आर्य, अभिवादये भरतोऽहम्।

**रामः** । एहि, इक्ष्वाकुकुमार ।

वक्षः प्रसारय कपाटपुटप्रमाण-
मालिङ्ग मां सुविपुलेन भुजद्वयेन।
उन्नामयाननमिदं शरदिन्दुकल्पं
प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥१६॥

दृढमालिङ्ग्य । स्वस्ति । आयुष्मान् भव ।

**भरतः** । अनुगृहीतोऽस्मि ।

**सुमन्त्रः** । उपेत्य । जयत्वायुष्मान् ।

**रामः** । हा तात,

गत्वा पूर्वं स्वसैन्यैरभिसरिसमये खं समानैर्विमानै-
र्विख्यातो यो विमर्दे स स इति बहुशः सासुराणां सुराणाम् ।
स श्रीमांस्त्यक्तदेहो दयितमपि विना स्नेहवन्तं भवन्तं
स्वर्गस्थः सांप्रतं किं रमयति पितृभिः स्वैर्नरेन्द्रैर्नरेन्द्रः ॥१७॥

**सुमन्त्रः ।**

नरपतिनिधनं भवत्प्रवासं
भरतविषादमनाथतां कुलस्य ।
बहुविधमनुभूय दुष्प्रसह्यं
गुण इव बह्वपराद्धमायुषा मे ॥१८॥

**सीता ।** रोदन्तं अज्जउत्तं पुणो वि रोदावेदि तादो ॥ रुदन्तमार्यपुत्रं पुनरपि रोदयति तातः ।

**रामः ।** मैथिलि, एष पर्यवस्थापयाम्यात्मानम् । वत्स लक्ष्मण, आपस्तावत् ।

**लक्ष्मणः ।** यदाज्ञापयत्यार्यः ।

**भरतः ।** आर्य, न खल्वेतन्न्याय्यम् । क्रमेण शुश्रूषितव्येऽहमेव यास्यामि । कलशं गृहीत्वा निष्क्रम्य पुनः प्रविश्य । इमा आपः ।

**रामः** आचम्य । मैथिलि, अवसीयते खलु लक्ष्मणस्य व्यापारः ।

**सीता ।** अज्जउत्तो णं एदिणा वि सुस्सूसिदव्वो ॥ आर्यपुत्रो नन्वेतेनापि शुश्रूषितव्यः ।

**रामः ।** सुष्ठु, इह खलु लक्ष्मणः शुश्रूषतां तत्र च भरतः ।

**भरतः ।** प्रसीदत्वार्यः ।

इह स्थास्यामि देहेन तत्र स्थास्यामि कर्मणा ।
नाम्नैव भवतो राज्यं कृतरक्षं भविष्यति ॥ १९ ॥

**रामः** । वत्स, मा मैवम् ।

पितुर्नियोगादहमागतो वनं
न वत्स दर्पान्न भयान्न विभ्रमात् ।
कुलं च नः सत्यधनं ब्रवीमि ते
कथं भवान् नीचपथे प्रवर्तसे ॥ २० ॥

**सुमन्त्रः** । अथेदानीमभिषेकः क्व तिष्ठतु ।

**रामः** । यत्र मे मात्राभिहितस्तत्रैव तावत् तिष्ठतु ।

**भरतः** । प्रसीदत्वार्यः । अलमिदानीं व्रणे प्रहर्तुम् ।

अपि सुगुण ममापि त्वत्प्रसूतिः प्रसूतिः
स खलु निभृतधीमंस्ते पिता मे पिता च ।
सुपुरुष पुरुषाणां मातृदोषो न दोषो
वरद भरतमार्तं पश्य तावद् यथावत् ॥ २१ ॥

**सीता** । अज्जउत्त, अदिकरुणं मन्तेदि भरदो । किं दाणिं अज्जउत्तेण चिन्तीअदि ॥ आर्यपुत्र, अतिकरुणं मन्त्रयते भरतः । किमिदानीमार्यपुत्रेण चिन्त्यते ।

**रामः** । मैथिलि,

तं चिन्तयामि नृपतिं परलोकयातं
येनायमात्मजविशिष्टगुणो न दृष्टः ।

प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा ।

ईदृग्विधं गुणनिधिं प्रतिपाद्य पुत्रं
धिग् भो विधे यदि बलं पुरुषोत्तमेषु ॥२२॥

वत्स कैकेयीमातः,

यत्सत्यं परितोषितोऽस्मि भवता निष्कल्मषात्मा भवां-
स्त्वद्वाक्यस्य वशानुगोऽस्मि भवतः ख्यातैर्गुणैर्निर्जितः ।
किंत्वेतन्नृपतेर्वचस्तदनृतं कर्तुं न युक्तं त्वया
पुत्रं प्राप्य भवद्विधं भवतु किं मिथ्याभिधायी पिता ॥२३॥

**भरतः ।**

यावद् भविष्यति भवन्नियमावसानं
तावद् भवेयमिह ते नृप पादमूले।

**रामः ।**

मैवं नृपः स्वसुकृतैरनुयातु सिद्धिं
त्वं शापितोऽसि परिरक्षसि चेन्न राज्यम् ॥२४॥

**भरतः ।** हन्त, अनुत्तरमभिहितम् । भवतु, समयतो राज्यं परिपालयामि ।

**रामः ।** वत्स, कः समयः ।

**भरतः ।** मम हस्ते निक्षिप्तं राज्यं चतुर्दशवर्षान्त आर्येण प्रतिगृह्येतेतीच्छामि ।

**रामः** । एवमस्तु ।

**भरतः** । आर्य, श्रुतम् । आर्य, श्रुतम् । तात, श्रुतम् ।

**सर्वे** । वयं श्रोतारः ।

**भरतः** । आर्य, अन्यदपीच्छामि ।

**रामः** । वत्स, किमिच्छसि ।

**भरतः** ।

पादोपभुक्ते तव पादुके मे
एते प्रयच्छ प्रणताय मूर्ध्ना ।
यावद् भवानेष्यति कार्यसिद्धिं
तावद् भविष्याम्यनयोर्विधेयः ॥२५॥

**रामः** आत्मगतम् । हन्त,

सुचिरेणापि कालेन यशः किंचिन्मयार्जितम् ।
अचिरेणैव तद् भूरि भरतेनाद्य संचितम् ॥२६॥

**सीता** । अज्जउत्त, णं दीयदु खु पुढमजाअणं भरतस्स ॥
आर्यपुत्र, ननु दीयतां खलु प्रथमयाचनं भरतस्य ।

**रामः** । तथास्तु । वत्स, गृह्यताम् ।

**भरतः** । अनुगृहीतोऽस्मि । पादुके गृहीत्वा । आर्य, अत्राभिषेक-मावर्जयितुमिच्छामि ।

**रामः** । तात, यदिष्टं भरतस्य तत् क्रियताम् ।

**सुमन्त्रः** । यदाज्ञापयत्यायुष्मान् ।

**भरतः** । आत्मगतम् । हन्त,

श्रद्धेयः स्वजनस्य पौररुचितो लोकस्य दृष्टिक्षमः
स्वर्गस्थस्य नराधिपस्य दयितः शीलान्वितोऽहं सुतः।
भ्रातॄणां गुणशालिनां बहुमतः कीर्तेर्महद् भाजनं
संवादेषु तथाश्रयो गुणवतां लब्धप्रियाणां प्रियः ॥२७॥

**रामः** । वत्स, कैकेयीमातः, राज्यं नाम मुहूर्तमपि नोपेक्षणीयम्। तस्मादद्यैव प्रतिनिवर्ततां कुमारः ।

**सीता** । ह, अज्ज एव्व गमिस्सदि कुमारो भरदो ॥ हम्, अद्यव गमिष्यति कुमारो भरतः ।

**रामः** । अलमतिस्नेहेन । अद्यैव विजयाय प्रतिनिवर्ततां कुमारः।

**भरतः** । आर्य, अद्यैवाहं गमिष्यामि ।

आशावन्तः पुरः पौराः स्थास्यन्ति त्वद्दिदृक्षया ।
तेषां प्रीतिं करिष्यामि त्वत्प्रसादप्रदर्शनात् ॥२८॥

**सुमन्त्रः** । आयुष्मन्, मयेदानीं किं कर्तव्यम् ।

**रामः** । तात, महाराजवत् परिपाल्यतां कुमारः ।

**सुमन्त्रः ।** प्रयतिष्ये ।

**रामः ।** वत्स कैकेयीमातः, आरुह्यतां समं तातेन रथः ।

**भरतः ।** यदाज्ञापयत्यार्यः ।

**रामः ।** मैथिलि, इतस्तावत् । वत्स लक्ष्मण, त्वमपीतस्तावत् । आश्रमपदद्वारमात्रमपि भरतस्यानुयात्रं करिष्यामः ।

निष्क्रान्ताः सर्वे ।

**इति पादुकाग्रहणं नाम चतुर्थोऽङ्कः ।**

---

ततः प्रविशति सीता ।

**सीता ।** संमज्जिदो उवहारसुमणसमाइण्णो अ अस्समो । अस्सम-पदविहवेण अणुट्ठिददेवसमुदाआरो जाव अज्जउत्तो ण आअच्छदि दाव इमाणं बालरुक्खाणं उदअदाणेण अणुक्कोसइस्सं ॥ संमार्जित उपहारसु-मनस्समाकीर्णश्चाश्रमो । आश्रमपदविभवेनानुष्ठितदेवसमुदाचारो यावदार्यपुत्रो नाग-च्छति तावदिमान् बालवृक्षानुदकदानेनानुक्रोशयिष्यामि ।

ततः प्रविशति रामः ।

**रामः** सशोकम् ।

त्यक्त्वा तां गुरुणा मया च रहितां शून्यामयोध्यापुरी-
मुद्यम्यापि ममाभिषेकमखिलं मत्संनिधावागतः ।
रक्षार्थं भरतः पुनर्गुणनिधिस्तत्रैव संप्रेषितः
कष्टं भो नृपतेर्धुरं सुमहतीमेकः समुत्कर्षति ॥१॥

ईदृशमेवैतत् । यावदिदानीमनीदृशशोकविनोदनार्थं मैथिलीं पश्यामि । क्व नु खलु गता वैदेही । परिक्रम्यावलोक्य । अये, इमानि खलु प्रत्यग्राभि-षिक्तानि वृक्षमूलान्यदूरगतां मैथिलीं सूचयन्ति ।

भ्रमति सलिलं वृक्षावर्ते सफेनमवस्थितं
तृषितपतिता नैते क्लिष्टं पिबन्ति जलं खगाः ।
स्थलमभिपतन्त्यार्द्राः कीटा बिले जलपूरिते
नववलयिनो वृक्षा मूले जलक्षयरेखया ॥२॥

विलोक्य । अये, इयं वैदेही । भोः कष्टम् ।

नास्याः करः श्राम्यति दर्पणे सोऽ-
भ्युपैति खेदं कलशं वहन्त्याः ।
कष्टं वनं स्त्रीजनसौकुमार्यं
समं लताभिः कठिनीकरोति ॥ ३ ॥

सीतामुपगच्छति ।

**सीता** राममवलोक्य। अह्मो, अज्जउत्तो । जेदु अज्जउत्तो ॥
अहो, आर्यपुत्रः । जयत्वार्यपुत्रः ।

**रामः ।** मैथिलि, यदि नास्ति ते धर्मविघ्न आस्यताम् ।

**सीता ।** जं अज्जउत्तो आणवेदि । उपविशति ॥ यदार्यपुत्र आज्ञापयति ।

**रामः ।** मैथिलि, प्रतिवचनार्थिनीमिव त्वां पश्यामि ।

**सीता ।** सोअसुण्णहिअअस्स विअ अज्जउत्तस मुहराओ ॥
शोकशून्यहृदयस्येवार्यपुत्रस्य मुखरागः ।

**रामः ।** मैथिलि, स्थाने खलु कृता चिन्ता ।

कृतान्तशल्याभिहते शरीरे
तथैव तावद्धृदयव्रणो मे ।
नानाफलाः शोकशराभिघाता-
स्तत्रैव तावन्निपतन्ति भूयः ॥ ४ ॥

**सीता ।** अज्जउत्तस्स को विअ संतावो ।। आर्यपुत्रस्य क इव संतापः ।

**रामः ।** श्वस्तत्रभवतस्तातस्यानुसंवत्सरश्राद्धविधिः । कल्पविशेषेण निपवनक्रियामिच्छन्ति पितरः । तत् कथं निर्वर्तयिष्यामीति चिन्त्यते ।

गच्छन्ति तुष्टिं खलु येन केन<br>
त एव जानन्ति दशामिमां मे ।<br>
प्रकर्तुमिच्छामि तथापि पूजां<br>
तातस्य रामस्य च मेऽनुरूपाम् ।। ५ ।।

**सीता ।** अज्जउत्त, णिव्वत्तइस्सदि सद्धं भरदो रिद्धीए, अवत्थाणुरूवं फलोदएण अ अज्जउत्तो । एदं तादस्स बहुमदं भविस्सदि ।। आर्यपुत्र, निर्वर्तयिष्यति श्राद्धं भरत ऋद्ध्या, अवस्थानुरूपं फलोदकेन चार्यपुत्रः । एतत् तातस्य बहुमतं भविष्यति ।

**रामः ।** मैथिलि,

फलानि दृष्ट्वा दर्भेषु स्वहस्तरचितानि नः ।<br>
स्मारितो वनवासस्य तातस्तत्रापि रोदिति ।। ६ ।।

ततः प्रविशत्याकाशयानेन परिव्राजकवेषो रावणः ।

**रावणः ।**

नियतमनियतात्मा रूपमेतद् गृहीत्वा<br>
खरवधकृतवैरं राघवं वञ्चयित्वा ।

स्वरपदपरिहीणां हव्यधारामिवाहं
जनकनृपसुतां तां हर्तुमेष प्रयामि ॥ ७ ॥

अधो विलोक्य। इदं रामस्याश्रमपदद्वारम्। यावदवतराम्यतिथि-समुदाचारं चानुतिष्ठामि। अवतीर्य। अहमतिथिर्भोः।

**रामः।** स्वागतमतिथये।

**रावणः।** साधु। आत्मगतम्। विशेषितं खलु रूपं स्वरेण। प्रविशति।

**रामः।** भगवन्, अभिवादये

**रावणः।** स्वस्ति।

**रामः।** भगवन्, एतदासनम्। आस्यताम्।

**रावणः** आत्मगतम्। कथम्, आज्ञप्त इवास्म्यनेन। प्रकाशम्। बाढम्। उपविशति।

**रामः।** मैथिलि, पाद्यमानय भगवन्तं।

**सीता।** जं अज्जउत्तो आणवेदि। यदार्यपुत्र आज्ञापयति।

**रावणः।** मायाप्रकाशनपर्याकुलो भूत्वा। भवतु भवतु।

इयमेषा पृथिव्यां हि मानुषीणामरुन्धती।

**रामः।** तेन ह्यहमेव शुश्रूषिष्ये।

**रावणः ।** मा मैवम् ।

पत्नीव्रतेन नारीभिः सत्कृतः कथ्यते भवान् ॥ ८ ॥

वाचानुवृत्तिः खल्वतिथिसत्कारः । पूजितोऽस्मि । आस्यताम् ।

**रामः ।** बाढम् । उपविशति ।

**रावणः** आत्मगतम् । यावद् ब्राह्मणसमुदाचारमनुतिष्ठामि । प्रकाशम् । भोः काश्यपगोत्रोऽस्मि । अधीयि साङ्गं वेदं मानवीयं धर्मशास्त्रं माहेश्वरं योगशास्त्रं बार्हस्पत्यमर्थशास्त्रं मेधातिथीयं न्यायशास्त्रं प्राचेतसं श्राद्धकल्पं—

**रामः** । कथम्, श्राद्धकल्पमिति ।

**रावणः** । सर्वाः श्रुतीरतिक्रम्य किं श्राद्धकल्पे स्पृहा दर्शिता ।

**रामः ।** भगवन् , नष्टायां पितृमत्तायामागम इदानीमस्य—

**रावणः** । अलम् । अपरिहृत्य पृच्छतु भवान् ।

**रामः** । भगवन् , निवपनक्रियायां पितॄणां किं विहितम् ।

**रावणः** । सर्वं श्रद्धया दत्तम् ।

**रामः ।** भगवन्, विशेषार्थं पृच्छामि ।

**रावणः** । श्रूयताम् । विरूढेषु दर्भा ओषधिषु तिलाः शाकेषु कालं मत्स्येषु महाशफरः पक्षिषु वार्ध्राणसः पशुषु गौः खड्गो वेत्येतानि मानुषाणां विहितानि ।

**रामः** । भगवन्, वाशब्देनावगतम् । अन्यदप्यस्तीति ।

**रावणः** । अस्ति प्रभावसंपाद्यम् ।

**रामः** । भगवन्

उभयस्यास्ति सांनिध्यं यद्येतत् साधयिष्यति ।
धनुर्वा तपसि श्रान्ते श्रान्ते धनुषि वा तपः ॥ ९ ॥

**रावणः** । हिमवति प्रतिवसन्ति प्रत्यक्षस्थाणुशिरःपतितगङ्गाम्बुपायिनः पवनजवा वैदूर्यपृष्ठाः काञ्चनपार्श्वा मृगाः, यैर्वैखानसवालखिल्यादयो नैमिषीया महर्षयश्चिन्तितोपस्थितैः श्राद्धान्यभिवर्धयन्ति ।

तैस्तर्पिताः सुतफलं पितरो लभन्ते
हित्वा जरां खमुपयन्ति हि दीप्यमानाः ।
तुल्यं सुरैः समुपयान्ति विमानवास-
मावर्तिभिश्च विषयैर्न बलाद्ध्रियन्ते ॥ १० ॥

**रामः** । मैथिलि,

आपृच्छ पुत्रकृतकान् हरिणान् द्रुमांश्च
विन्ध्यं वनं तव सखीर्दयिता लताश्च ।
वत्स्यामि तेषु हिमवद्गिरिकाननेषु
दीप्तैर्महौषधिवनैरुपरञ्जितेषु ॥ ११ ॥

**सीता** । जं अज्जउत्तो आणवेदि । यदार्यपुत्र आज्ञापयति ।

**रावणः** । कौशल्यामातः, अलमतिमनोरथेन । न ते मानुषैर्दृश्यन्ते ।

**रामः ।** भगवन्, ननु ते हिमवति प्रतिवसन्ति ।

**रावणः ।** अथ किम् ।

**रामः ।** तेन हि पश्यतु भगवान् ।

सौवर्णान् वा मृगांस्तान् मे हिमवान् दर्शयिष्यति ।
भिन्नो वा मम बाणेन क्रौञ्चत्वं स गमिष्यति ॥ १२ ॥

**रावणः** आत्मगतम् । असह्यः खल्वस्यावलेपः । प्रकाशम् । अये, विद्युत्संपात इव । कौशल्यामातः, इहस्थमेव भवन्तं वर्धयति हिमवान् । एष काञ्चनपार्श्वः ।

**रामः ।** भगवन्, नैवम् ।

तातस्यैतानि भाग्यानि यत् स स्वयमिहागतः ।
सीतां प्रति ।
अर्हत्येष हि पूजायां लक्ष्मणं ब्रूहि मैथिलि ॥१३॥

**सीता ।** अज्जउत्त, णं तित्थअत्तादो उवावत्तमाणं कुलवदिं पच्चुग्गच्छेहि त्ति संदिट्ठो सोमित्ती । आर्यपुत्र, ननु तीर्थयात्राया उपावर्तमानं कुलपतिं प्रत्युद्गच्छेति संदिष्टः सौमित्रिः ।

**रामः ।** तेन ह्यहमेव यास्यामि । शुश्रूषस्व भगवन्तम् ।

**सीता ।** जं अज्जउत्तो आणवेदि ॥ यदार्यपुत्र आज्ञापयति ।

निष्क्रान्तो रामः ।

**रावणः** आत्मगतम्। अये, योऽयं पाद्यमादायोपससर्प राघवः स एष इदानीं धनुरारोप्य धावन्तं मृगमनुधावति। निरूप्य।

अहो बलमहो वीर्यमहो सत्त्वमहो जवः।
राम इत्यक्षरैरल्पैः स्थाने व्याप्तमिदं जगत् ॥१४॥

एष मृग एकप्लुतातिक्रान्तशरविषयो वनगहनं प्रविष्टः।

**सीता** आत्मगतम्। अज्जउत्तविरहिदाए भअं मे एत्थ उप्पज्जइ ॥ आर्यपुत्रविरहिताया भयं मेऽत्रोत्पद्यते।—

**रावणः** आत्मगतम्। हन्त,

मायया पहृते रामे सीतामेकां तपोवनात्।
हरामि रुदतीं बालाममन्त्रोक्तामिवाहुतिम् ॥१५॥

**सीता**।—जाव आतित्थं संपादेदुं उडअं पविसामि ॥—यावदातिथ्यं संपादयितुमुटजं प्रविशामि।

सीता गन्तुमीहते।

**रावणः** स्वरूपं गृहीत्वा। सीते, तिष्ठ।

**सीता** सभयम्। हा को दाणिं अअं ॥ हा क इदानीमयम्।

**रावणः**। किं न जानीषे।

युद्धे येन सुराः सदानवगणाः शक्रादयो निर्जिता
दृष्ट्वा शूर्पणखाविरूपकरणं श्रुत्वा हतौ भ्रातरौ।

दर्पाद् दुर्मतिमप्रमेयबलिनं रामं विलोभ्य च्छलैः
स त्वां हर्तुमनाः सरोजनयने प्राप्तोऽस्म्यहं रावणः ॥१६॥

**सीता ।** अज्जउत्त, परित्ताहि ॥ आर्यपुत्र, परित्रायस्व ।

**रावणः ।**

विलपसि किमिदं विशालनेत्रे
विगणय मामधुना तवार्यपुत्रम् ।
विपुलबलयुतो मयैष योद्धुं
ससुरगणोऽप्यसमर्थ एव रामः ॥१७॥

**सीता** सरोषम् । सत्तो सि ॥ शप्तोऽसि ।

**रावणः** आत्मगतम् । अहो पतिव्रतायास्तेजः ।

योऽहमुत्पतितो वेगान्न दग्धः सूर्यरश्मिभिः ।
सोऽस्याः परिमितैर्दग्धः शप्तोऽसीत्येभिरक्षरैः ॥१८॥

**सीता ।** अज्जउत्त, परित्ताहि, परित्ताहि मं ॥ आर्यपुत्र, परित्रायस्व, परित्रायस्व माम् ।

**रावणः** सीतां गृहीत्वा । भो भो जनस्थानवासिनस्तपस्विनः, शृण्वन्तु भवन्तः ।

बलादेष दशग्रीवः सीतामादाय गच्छति ।
क्षात्रे धर्मे यदि स्निग्धः कुर्याद् रामो विमोचनम् ॥१९॥

आकाशयानेन गच्छन् । अये, स्वपक्षपवनोत्क्षेपक्षुभितवनषण्डश्चण्डचञ्चुर-भिधावत्येष दशरथसखो जटायुः । आः, उपतिष्ठस्व । इदानीम्

मद्भुजाकृष्टनिस्त्रिंशकृत्तपक्षक्षतच्युतैः ।
रुधिरैरार्द्रगात्रं त्वां नयामि यमसादनम् ॥२०॥

निष्क्रान्तः सह सीतया ।

## इति सीताहरणं नाम पञ्चमोऽङ्कः ।

ततः प्रविशतो वृद्धतापसौ ।

**उभौ ।** परित्रायन्तां परित्रायन्तां भवन्तः ।

**प्रथमः ।**

इयं हि नीलोत्पलदामवर्चसा
मृणालशुक्लोज्ज्वलदन्तहासिना ।
निशाचरेणाद्य निशार्धचारिणा
मृगीव काचिद्धरिणेह नीयते ॥१॥

**द्वितीयः ।** एषा खलु तत्रभवती वैदेही ।

विचेष्टमानेव भुजङ्गमाङ्गना
विकम्पमानेव विपुष्पिता लता ।
प्रसह्य पापेन दशाननेन सा
तपोवनात् सिद्धिरिवापनीयते ॥२॥

नेपथ्ये । तिष्ठ, रे, राक्षसाधम, मयि स्थिते क्व यास्यसि ।

**प्रथमः ।** अये, दशरथस्यानृण्यं गन्तुं रावणमाहूयान्तरिक्षेऽनुपतितो जटायुः ।

**द्वितीयः ।** एष रोषादुद्वृत्तनयनः प्रतिनिवृत्तो रावणः ।

**प्रथमः ।** प्राप्तो जटायुः ।

**द्वितीयः ।** प्राप्तो रावणः ।

**उभौ ।** हन्त, प्रवृत्तमन्तरिक्षे युद्धम् ।

**प्रथमः ।** पश्य, पश्य क्रव्यादीश्वरस्य सामर्थ्यम् ।

पक्षाभ्यां परिभूय वीर्यसदृशं द्वन्द्वे प्रतिव्यूहति
तुण्डेनाथ निघृष्टतिक्तविकटं संवेधनं चेष्टते ।
तीक्ष्णैरायसकण्टकैरिव नखैः क्रोमान्तरं वक्षसो
वज्राग्रैरिव दार्यमाणविषमाच्छैलाच्छिला पात्यते ॥३॥

**द्वितीयः ।** हन्त, संक्रुद्धेन रावणेनासिना क्रव्यादीश्वरो दक्षिणांसदेशे हतः ।

**उभौ ।** हा धिक् । पतितोऽत्रभवान् जटायुः ।

**प्रथमः ।** भोः कष्टम् । एष खलु

कृत्वा स्ववीर्यसदृशं परमं प्रयत्नं
क्रीडामयूरमिव शत्रुमचिन्तयित्वा ।
दीप्तं निशाचरपतेरवधूय तेजो
वात्याविभग्नवनवृक्ष इवावसन्नः ॥४॥

**उभौ ।** स्वर्ग्योऽयमस्तु ।

**प्रथमः ।** आगम्यताम् । इमं वृत्तान्तं तत्रभवते राघवाय निवेदयावः ।

**द्वितीयः ।** बाढम् । प्रथमः कल्पः ।

निष्क्रान्तौ ।

## इति तृतीयो विष्कम्भकः

ततः प्रविशति काञ्चुकीयः।

**काञ्चुकीयः** । क इह भोः काञ्चनतोरणद्वारमशून्यं कुरुते ।

**प्रतिहारी** प्रविश्य । अज्ज, अहं विजआ । किं करीअदु ॥ आर्य, अहं विजया । किं क्रियताम् ।

**काञ्चुकीयः** । विजये, निवेद्यतां भरतकुमाराय । एष खलु सम-दर्शनार्थं जनस्थानं प्रस्थापितः प्रतिनिवृत्तस्तत्रभवान् सुमन्त्र इति ।

**प्रतिहारी** । अज्ज, अवि किदत्थो तादसुमन्तो आअदो ॥ आर्य, अपि कृतार्थस्तातसुमन्त्र आगतः ।

**काञ्चुकीयः** । भवति, न जाने । अपि तु

हृदयस्थितशोकाग्निशोषिताननमागतम् ।
दृष्ट्वैवाकुलमासीन्मे सुमन्त्रमधुना मनः ॥ १ ॥

**प्रतिहारी** । अज्ज, एदं सुणिअ पज्जाउलं विअ मे हिअअं ॥ आर्य, एतच्छ्रुत्वा पर्याकुलमिव मे हृदयम् ।

**काञ्चुकीयः** । भवति, किमिदानीं स्थिता । शीघ्रं निवेद्यताम् ।

**प्रतिहारी** । अज्ज, इअं णिवेदेमि ॥ आर्य, इयं निवेदयामि ।

निष्क्रान्ता प्रतिहारी ।

**काञ्चुकीयः** विलोक्य । अये, अयमत्रभवान् भरतकुमारः सुमन्त्रागमनजनितकुतूहलो वल्कलवसनो जटापुञ्जपिञ्जरितोत्तमाङ्ग इत एवाभिवर्तते ।

ततः प्रविशति यथानिर्दिष्टो भरतः ।

**भरतः** । आर्य,

गत्वा तु पूर्वतममार्यनिरीक्षणार्थं
लब्धप्रसादशपथे मयि संनिवृत्ते ।
दृष्ट्वा किमागत इहात्रभवान् सुमन्त्रो
रामं प्रजानयनबुद्धिमनोभिरामम् ॥२॥

**काञ्चुकीयः** उपसृत्य । जयतु कुमारः । असौ काञ्चनतोरणद्वारे तिष्ठति ।

**भरतः** । तेन हि शीघ्रं प्रवेश्यताम् ।

**कञ्चुकीयः** । यदाज्ञापयति कुमारः । निष्क्रान्तः ।

ततः प्रविशतः सुमन्त्रः प्रतिहारी च ।

**प्रतिहारी** । एदु अज्जो ॥ एत्वार्यः ।

**सुमन्त्रः** । कष्टं भोः

नरपतिनिधनं मयानुभूतं
नृपतिसुतव्यसनं मया च दृष्टम् ।

श्रुत इह स च मैथिलीप्रणाशो
गुण इव बह्वपराद्धमायुषा मे ॥३॥

**प्रतीहारी ।** एसो भट्टा । उवसप्पदु अज्जो ॥ एष भर्ता । उपसर्पत्वार्यः ।

**सुमन्त्रः** उपसृत्य । जयतु कुमारः ।

**भरतः ।** भोः, अपि दृष्टो लोक आविष्कृतः पितृस्नेहः। अपि दृष्टं द्विधाभूतमरुन्धतीचारित्रम् । अपि दृष्टं निष्कारणविहितवनवासं सौभ्रात्रम् ।

सुमन्त्रस्तूष्णीमास्ते ।

**भरतः** अदर्शनमाशङ्क्य । अतिमहान् खल्वायास इति संतापाद् भग्नहृदयोऽथ भवानपि मार्गात् प्रतिनिवृत्तः ।

**सुमन्त्रः ।** कुमार, त्वन्नियोगाद् रामदर्शनार्थं जनस्थानं प्रस्थितः कथमहमन्तरा प्रतिनिवर्तिष्ये ।

**भरतः ।** किंनु क्रोधेन वा लज्जया वात्मानं ते न दर्शयन्ति ।

**सुमन्त्रः ।** कुमार,

कुतः क्रोधो विनीतानां लज्जा वा कृतचेतसाम् ।
मया दृष्टं तु तच्छून्यं तैर्विहीनं तपोवनम् ॥४॥

**भरतः ।** अथ क्व गता इति श्रुतम् ।

**सुमन्त्रः ।** अस्ति किल किष्किन्धा नाम वनौकसां निवासः । तत्र गता इति श्रुतं मया ।

**भरतः ।** अविज्ञातपुरुषविशेषाः खलु वानराः । हन्त, दुःखितास्ते प्रतिवसन्ति ।

**सुमन्त्रः ।** कुमार, तिर्यग्योनयोऽप्युपकृतमवगच्छन्ति ।

**भरतः ।** तात, कथमिवोपकृतम् ।

**सुमन्त्रः ।**

सुग्रीवो भ्रंशितो राज्याद् भ्रात्रा ज्येष्ठेन वालिना ।
हृत दारो वसञ्छैले तुल्यदुःखेन मोक्षितः ॥५॥

**भरतः ।** तात, कथं तुल्यदुःखेन नाम ।

**सुमन्त्रः ।** आत्मगतम् । हन्त, सर्वमुक्तं मया । भवतु, एवं तावत् । प्रकाशम् । कुमार, ऐश्वर्यभ्रंशतुल्यता मयाभिप्रेता ।

**भरतः ।** तात, किं गूहसे । स्वर्गं गतेन महाराजपादमूलेन शापितः स्या यदि सत्यं न ब्रूयाः ।

**सुमन्त्रः ।** का गतिः । श्रूयताम् ।

वैरं मुनिजनस्यार्थे रक्षसा महता कृतम् ।
सीता मायामुपाश्रित्य रावणेन ततो हृता ॥६॥

**भरतः ।** कथम् । हृतेति । मोहमुपगच्छति ।

**सुमन्त्रः ।** कुमार, समाश्वसिहि, समाश्वसिहि ।

**भरतः** समाश्वस्य **।** भोः कष्टम् ।

पित्रा च बान्धवजनेन च विप्रयुक्तो
दुःखं महत् समनुभूय वनप्रदेशे ।
भार्यावियोगमुपलभ्य पुनर्ममार्यो
जीमूतचन्द्र इव खे प्रभया वियुक्तः ॥७॥

भोः किमिदानीं करिष्ये । भवतु, दृष्टम् । अनुगच्छतु मां तातः ।

**सुमन्त्रः** । यदाज्ञापयति कुमारः ।

उभौ परिक्रामतः ।

**सुमन्त्रः** । कुमार, न खलु देवीनां चतुःशालं गन्तव्यम् ।

**भरतः** । अथ किम् । अत्रैव मे कार्यम् । क इह प्रतिहारे ।

**प्रतिहारी** प्रविश्य । जेदु भट्टिदारओ । विजआ खु अहं ॥ जयतु भर्तृदारकः । विजया खल्वहम् ।

**भरतः** । विजये, ममागमनं निवेदयात्रभवत्यै ।

**प्रतिहारी** । कदमाए भट्टिणीए णिवेदेमि ॥ कतमस्यै भट्टिन्यै निवेदयामि ।

**भरतः** । या मां राजानमिच्छति ।

**प्रतिहारी** आत्मगतम् । हन्त, किं णु खु भवे । प्रकाशम् । भट्टा तह । निष्क्रान्ता ॥ हन्त, किं नु खलु भवेत् ।...। भर्तः, तथा ।

ततः प्रविशतः कैकेयी प्रतिहारी च ।

**कैकेयी ।** विजए, मं पेक्खिदुं भरदो आअदो ॥ विजये, मां द्रष्टुं भरत आगतः ।

**प्रतिहारी ।** भट्टिणि, भट्टिदारअस्स रामस्स सआसादो तादसुमन्तो आअदो, तेण सह भट्टिदारओ भरदो भट्टिणिं पेक्खिदुं इच्छदि किल ॥ भट्टिनि, भर्तृदारकस्य रामस्य सकाशात् तात सुमन्त्र आगतः, तेन सह भर्तृदारको भरतो भट्टिनीं द्रष्टुमिच्छति किल ।

**कैकेयी** आत्मगतम् । केन वि उग्घादेण मं उवालम्भिस्सदि भरदो ॥ केनाप्युद्घातेन मामुपालप्स्यते भरतः ।

**प्रतिहारीः ।** भट्टिणि, किं पविसदु भट्टिदारओ ॥ भट्टिनि, किं प्रविशतु भर्तृदारकः ।

**कैकेयी ।** गच्छ । पवेसेहि णं ॥ गच्छ । प्रवेशयैनम् ।

**प्रतिहारी ।** भट्टिणि, तह । परिकम्योपसृत्य । जेदु भट्टिदारओ । पाविसदु किल ॥ भट्टिनि, तथा ।......। जयतु भर्तृदारकः । प्रविशतु किल ।

**भरतः ।** विजये, किं निवेदितम् ।

**प्रतिहारी ।** आम ॥ आम् ।

**भरतः ।** तेन हि प्रविशावः ।

भरतसुमन्त्रौ प्रविशतः ।

**कैकेयी ।** जाद, विजआ मन्तेदि । रामस्स सआसादो सुमन्तो आअदो त्ति ॥ जात, विजया मन्त्रयते । रामस्य सकाशात् सुमन्त्र आगत इति ।

**भरतः** । अतः परं प्रियं निवेदयाम्यत्रभवत्यै ।

**कैकेयी** । जाद, अवि कोसल्ला सुमित्ता अ सद्दाइदव्वा ॥ जात, अपि कौशल्या सुमित्रा च शब्दायितव्ये ।

**भरतः** । न खलु ताभ्यां श्रोतव्यम् ।

**कैकेयी** आत्मगतम् । हन्त, किं णु खु भवे । प्रकाशम् । भणाहि, जाद ॥ हन्त, किं नु खलु भवेत् ।......। भण, जात ।

**भरतः** । श्रूयताम् ।

यः स्वराज्यं परित्यज्य त्वन्नियोगाद्वनं गतः ।
तस्य भार्या हृता सीता पर्याप्तस्ते मनोरथः ॥८॥

**कैकेयी** । हुं ॥ हुम् ।

**भरतः** ।

हन्त भोः सत्त्वयुक्तानामिक्ष्वाकूणां मनस्विनाम् ।
वधूप्रधर्षणं प्राप्तं प्राप्यात्रभवतीं वधूम् ॥९॥

**कैकेयी** आत्मगतम् । भोदु, दाणिं कालो कहेदुं । प्रकाशम् । जाद, तुवं ण जाणासि महाराअस्स सावं ॥ भवतु, इदानीं कालः कथयितुम् ।......। जात, त्वं न जानासि महाराजस्य शापम् ।

**भरतः** । किं शप्तो महाराजः ।

**कैकेयी** । सुमन्त, आअक्खव वित्थरेण ॥ सुमन्त्र, आचक्ष्व विस्तरेण ।

**सुमन्त्रः ।** यदाज्ञापयति भवती । कुमार, श्रूयताम् । पुरा मृगयां गतेन महाराजेन कस्मिंश्चित् सरसि कलशं पूरयमाणो बृंहितानुकारिशब्द-समुत्पन्नवनगजशङ्कया शब्दवेधिना शरेण विपन्नचक्षुषो महर्षेश्चक्षुर्भूतो मुनितनयो हिंसितः ।

**भरतः** । हिंसित इति । शान्तं पापम् । ततस्ततः ।

**सुमन्त्रः ।** तमेवं गतं दृष्ट्वा

तेनोक्तं रुदितस्यान्तर्मुनिना सत्यभाषिणा ।
यथाहं भोस्त्वमप्येवं पुत्रशोकाद् विपत्स्यसे ॥१०॥

इति ।

**भरतः** । नन्विदं कष्टं नाम ।

**कैकेयी ।** जाद, एदण्णिमित्तं अवराहे मए अत्ताणं णिक्खिविअ पुत्तओ रामो वणं पेसिदो, ण खु रज्जलोहेण । अपरिहरणीओ महरिसिसावो पुत्तविप्पवासं विणा ण फलदि ॥ जात, एतन्निमित्तमपराधे मयात्मानं निक्षिप्य पुत्रको रामो वनं प्रेषितो, न खलु राज्यलोभेन । अपरिहरणीयो महर्षिशापः पुत्र-विप्रवासं विना न फलति ।

**भरतः ।** अथ तुल्ये पुत्रविप्रवासे कथमहमरण्यं न प्रेपितः ।

**कैकेयी ।** जाद, मादुलकुले वत्तमाणस्स अपइदीहूदो दे विप्पवासो ॥ जात, मातुलकुले वर्तमानस्य अप्रकृतीभूतस्ते विप्रवासः ।

**भरतः** । अथ चतुर्दश वत्सराः किंकारणं विवक्षिताः ।

**कैकेयी ।** जाद, चउद्दस वासरत्ति वत्तुकामाए पज्जाउलहि-अअदाए चउद्दस वस्सरत्ति उत्तं ।। जात, चतुर्दश वासरा इति वक्तुकामथा पर्याकुलहृदयतया चतुर्दश वत्सरा इत्युक्तम् ।

**भरतः ।** अस्ति पाण्डित्यं सम्यग् विवरितुम् । सुमन्त्रं पति । अथ विदितमेतद् गुरुजनस्य ।

**सुमन्त्रः ।** कुमार, भगवतां वसिष्ठवामदेवानां विदितं संमतं च ।

**भरतः ।** दिष्ट्यानपराद्धात्रभवती । अम्ब, यद् भ्रातृस्नेहात् समुत्पन्नमन्युना मयासि दूषिता तत् सर्वं मर्षयितव्यम् । अभिवादयेऽत्रभवतीम् । पादयोः पतति ।

**कैकेयी ।** जाद, उट्ठेहि । को एत्थ दे दोसो ।। जात, उत्तिष्ठ । कोऽत्र ते दोषः ।

**भरतः ।** अनुगृहीतोऽस्मि । उत्थाय । आपृच्छाम्यत्रभवतीम् । अद्यैवाहमार्यस्य साहाय्यार्थं कृत्स्नं राजमण्डलमुद्योजयामि ।

वेलामहं मत्तगजान्धकारां
करोमि सैन्यौघनिवेशनेन ।
बलैस्तरद्भिश्च नयामि तुल्यां
ग्लानिं समुद्रं सह रावणेन ॥१६॥

नेपथ्ये समुत्थितं शब्दमाकर्ण्य । अये, शब्द इव ।

**प्रतिहारी** प्रविश्य । भट्टिणि, इमं वुत्तन्तं सुणिअ जेट्ठभट्टिणी मोहं गदा ॥ भट्टिनि, इमं वृत्तान्तं श्रुत्वा ज्येष्ठभट्टिनी मोहं गता ।

**कैकेयी** । हुं ॥ हुम् ।

**भरतः** । कथम्, मोहं गताम्बा ।

**कैकेयी** । एहि, जाद, अज्जं अस्सासेमो ॥ एहि, जात, आर्यामाश्वासयावः ।

**भरत** । यदाज्ञापयत्यम्बा ।

निष्क्रान्ताः सर्वे ।

## इति रहस्योद्घाटनं नाम षष्ठोऽङ्कः ।

ततः प्रविशति तापसः ।

**तापसः ।** नन्दिलक—

**नन्दिलकः** । प्रविश्य । अज्ज, अअं ह्मि ।। आर्य, अयमस्मि ।

**तापसः** । कुलपतिराज्ञापयति । एष खलु स्वदारापहारिणं रावणं नाशयित्वा राक्षसगणाविरुद्धवृत्तं विभीषणमभिषिच्य विमलचरित्रां सीता-मादायर्क्षराक्षसवानरमुख्यैः परिवृतः संप्राप्तस्तत्रभवान् रामः । तदस्म-द्विभवेन यत् संकल्पयितव्यं तत् सर्वं सज्जीक्रियतामिति ।

**नन्दिलकः ।** अज्ज, सव्वं सज्जीकिदं । किंतु—।। आर्य, सर्वं सज्जी-कृतम् । किंतु—।

**तापसः ।** किमेतत् ।

**नन्दिलकः ।** एत्थ विभीसणकेरआ रक्खसा, तेसं भोअणणि-मित्तं कुलवदी पमाणं ।। अत्र विभीषणसंबन्धिनो राक्षसाः, तेषां भोजननि-मित्तं कुलपतिः प्रमाणम् ।

**तापसः ।** किमर्थम् ।

**नन्दिलकः** । ते खु खाअन्ति ।। ते खलु खादन्ति ।

**तापसः ।** अलं संभ्रमेण । विभीषणविधेयाः खलु राक्षसाः ।

**नन्दिलकः ।** णमो रक्खससज्जणाणं । तदो णो चिन्ता का-दव्वा ।। नमो राक्षससज्जनानाम् । ततो नो चिन्ता कर्तव्या ।

निष्क्रान्तो नन्दिलकः ।

**तापसः** विलोक्य । अये, अयमत्रभवान् राघवः ।

जय नरवर जेयः स्विद् द्वितीयस्तवारि-
र्भवति तव विधेया भूमिरेकातपत्रा ।
इति मुनिभिरनेकैः स्तूयमानः प्रसन्नैः
क्षितितलमवतीर्णो मानवेन्द्रो विमानात् ॥१॥

निष्क्रान्तस्तापसः ।

## इति चतुर्थो विष्कम्भकः ।

---

ततः प्रविशति रामः ।

**रामः**

समुदितबलवीर्यं रावणं नाशयित्वा
जगति गुणसमग्रां प्राप्य सीतां विशुद्धाम् ।
वचनमपि गुरूणामन्तशः पूरयित्वा
मुनिजनवनवासं प्राप्तवानस्मि भूयः ॥१॥

तापसीनामभिवन्दनार्थमभ्यन्तरं प्रविष्टा चिरायते खलु मैथिली । विलोक्य । अये, इयं वैदेही ।

सखीति सीतेति च जानकीति
यथावयः स्निग्धतरं स्नुषेति ।
तपस्विदारैर्जनकस्य पुत्री
संभाष्यमाणा समुपैति मन्दम् ॥२॥

ततः प्रविशन्ति सीता तापस्यश्च ।

**तापस्यः** । हला, एसो दे कुडुम्बिओ । उवसप्प णं । ण सक्कं तुमं एआइणिं उवेक्खिदुं ॥ हला, एष ते कुटुम्बिकः । उपसर्पैनम् । न शक्यं त्वामेकाकिनीमुपेक्षितुम् ।

निष्क्रान्तास्तापस्यः ।

**सीता** । हन्त, अज्ज वि अविस्ससणीअं विअ मे पडिभादि । राममुपसृत्य । जेदु अज्जउत्तो ॥ हन्त, अद्याप्यविश्वसनीयमिव मे प्रतिभाति ।... ...। जयत्वार्यपुत्रः ।

**रामः ।** मैथिलि, अपि जानासि पूर्वाधिष्ठानमस्माकम् । अप्यत्र ज्ञायन्ते पुत्रकृतका वृक्षाः ।

**सीता ।** जाणामि, अज्जउत्त । पुव्वं ओलोइआ एदे उल्लोअइदव्वा दाणिं संवुत्ता ॥ जानामि, आर्यपुत्र । पूर्वमवलोकिता एत उल्लोकयितव्या इदानीं संवृत्ताः ।

**रामः ।** अयं तु नस्तपसः साक्षिभूतो महाकच्छः । अत्रास्माभिरासीनैस्तातस्य निवपनक्रियां चिन्तयद्भिः काञ्चनपार्श्वो मृगो दृष्टः ।

**सीता ।** हुं, अज्जउत्त, मा खु एदं भणिदुं । वेपते ॥ हुम्, आर्यपुत्र, मा खल्वेतद् भणितुम् ।

**रामः** पांसुस्तोमं समुत्पतन्तं निर्दिशन् । अये, कुतो नु

रेणुः समुत्पतति लोध्रसमानगौरः
संप्रावृणोति च दिशः पवनावधूतः ।
शङ्खध्वनिश्च पटहस्वनधीरनादैः
संमूर्छितो वनमिदं नगरीकरोति ॥ ३ ॥

**लक्ष्मणः ।** प्रविश्य । आर्य,

सैन्येन महता त्वद्दर्शनसमुत्सुकः ।
मातृभिः सह संप्राप्तो भरतो भ्रातृवत्सलः ॥४॥

**रामः ।** वत्स लक्ष्मण, किमेवम् । भरतः प्राप्तः ।

**लक्ष्मणः ।** आर्य, अथ किम् ।

**रामः ।** मैथिलि, श्वश्रूजनपुरोगं भरतमवलोकयितुं विशालीभवतु ते चक्षुः ।

**सीता ।** अज्जउत्त, इच्छिदव्वे काले भरदो आगदो ॥ आर्यपुत्र, एष्टव्ये काले भरत आगतः ।

ततः प्रविशति भरतः समातृकः ।

**भरतः ।**

तैस्तैः प्रवृद्धविषमैर्व्यसनैर्विमुक्तं
मेघैर्विमुक्तममलं शरदीव सोमम् ।
आर्यासहायमहमद्य गुरुं दिदृक्षुः
प्राप्तोऽस्मि हृष्टहृदयः स्वजनानुबद्धः ॥५॥

**रामः ।** अम्बाः, अभिवादये ।

**सर्वाः ।** जाद, चिरं जीव । दिट्ठिआ वड्ढामो अवसिदपडिण्णं तुमं कुसलिणं सह वहूए पेक्खिअ॥ जात, चिरं जीव । दिष्ट्या वर्धामहेऽवसितप्रतिज्ञं त्वां कुशलिनं सह वध्वा दृष्ट्वा ।

**रामः ।** अनुगृहीतोऽस्मि ।

**लक्ष्मणः ।** अम्बाः, अभिवादये ।

**सर्वाः ।** जाद, चिरं जीव ॥ जात, चिरं जीव ।

**लक्ष्मणः ।** अनुगृहीतोऽस्मि ।

**सीता ।** अज्जा, वन्दामि ॥ आर्याः, वन्दे ।

**सर्वाः ।** वच्छे, चिरमङ्गला होहि ॥ वत्से, चिरमङ्गला भव ।

**सीता ।** अणुग्गहिदह्मि ॥ अनुगृहीतास्मि ।

**भरतः ।** आर्य, अभिवादये ।

**रामः ।** एहि, इक्ष्वाकुकुमार ।

वक्षः प्रसारय कवाटपुटप्रमाण-
मालिङ्ग मां सुविपुलेन भुजद्वयेन ।
उन्नामयाननमिदं शरदिन्दुकल्पं
प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥६॥

दृढमालिङ्गय । स्वस्ति । आयुष्मान् भव ।

**भरतः ।** अनुगृहीतोऽस्मि । आर्य, अभिवादये भरतोऽहम् ।

**सीता ।** अज्जउत्तेण चिरसंचारी होहि ॥ आर्यपुत्रेण चिरसंचारी भव ।

**भरतः ।** अनुगृहीतोऽस्मि । आर्य, अभिवादये ।

**लक्ष्मणः ।** एह्येहि, वत्स, परिष्वजस्व माम्। आलिङ्गय । दीर्घायुर्भव ।

**भरतः ।** अनुगृहीतोऽस्मि । आर्य, प्रतिगृह्यतां राज्यम् ।

**रामः ।** वत्स, कथमिव । कात्र त्वरा ।

**कैकेयी ।** जाद, चिराहिलसिदो खु एसो मणोरहो ॥ जात, चिराभिलषितः खल्वेष मनोरथः ।

ततः प्रविशति शत्रुघ्नः ।

**शत्रुघ्नः ।**

विविधैर्व्यसनैः क्लिष्टमक्लिष्टनिजतेजसम् ।
द्रष्टुं मे त्वरते बुद्धी रावणान्तकरं गुरुम् ॥७॥

उपगम्य । आर्य, शत्रुघ्नोऽहमभिवादये ।

**रामः** । वत्स, स्वस्ति । आयुष्मान् भव ।

**शत्रुघ्नः** । अनुगृहीतोऽस्मि । आर्ये, अभिवादये ।

**सीता** । वच्छ, चिरं जीव ॥ वत्स, चिरं जीव ।

**शत्रुघ्नः** । अनुगृहीतोऽस्मि । आर्य, अभिवादये ।

**लक्ष्मणः** । वत्स, आयुष्मान् भव ।

**शत्रुघ्नः** । अनुगृहीतोऽस्मि । आर्य, भगवन्तौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं पुरस्कृत्य त्वद्दर्शनमभिलषतः ।

**कैकेयी** । गच्छ, जाद, अभिजुसेहि अभिसेअं ॥ गच्छ, जात, अभिजुषस्वाभिषेकम् ।

**रामः** । यदाज्ञापयत्यम्बा । निष्क्रान्तः ।

नेपथ्ये । जयतु भवान् । जयतु भद्रमुखः । जयत्वार्यः । जयतु स्वामी । जयतु महाराजः । जयतु देवः । जयतु रावणान्तकः ।

**कैकेयी** । एदे पुरोहिदा कञ्चुइणो अ पुत्तअस्स मे विजअं वड्ढअन्ति ॥ एते पुरोहिताः कञ्चुकिनश्च पुत्रकस्य मे विजयं वर्धयन्ति ।

**कौशल्यासुमित्रे ।** पइदीओ परिचारआ सज्जणा अ पुत्तअस्स विजअं वड्ढअन्ति ।। प्रकृतयः परिचारकाः सज्जनाश्च पुत्रकस्य विजयं वर्धयन्ति ।

नेपथ्ये । भो भो जनस्थानवासिनस्तपस्विनः, शृण्वन्तु भवन्तः ।

हत्वा रिपुप्रभवमप्रमितं तमौघं
सूर्योऽन्धकारमिव शौर्यमयैर्मयूखैः ।
सीतामवाप्य सकलाशुभवर्जनीयां
रामो महीं जयति सर्वजनाभिरामः ।। ८ ।।

**कैकेयी ।** अम्महे, पुत्तअस्स मे विजअघोसणा वड्ढइ ।। अहो, पुत्रकस्य मे विजयघोषणा वर्धते ।

ततः प्रविशति कृताभिषेको रामः सपरिवारः ।

**रामः** प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा । भोस्तात,

स्वर्गेऽपि तुष्टिमुपगच्छ विमुच्य दैन्यं
वृत्तं त्वयाभिलषितं मयि यत् तदेतत् ।
राजा किलास्मि भुवि सत्कृतभारवाही
धर्मेण लोकपरिपालनमभ्युपेतम् ।। ९ ।।

**भरतः ।** हन्त,

अधिगतनृपशब्दं धार्यमाणातपत्रं
विरचितमणिमौलिं तीर्थतोयाभिषिक्तम् ।

गुरुमधिगतशीलं वन्द्यमानं जनौघै-
नवशशिनमिवार्यं पश्यतो मे न तृप्तिः ॥१०॥

**शत्रुघ्नः ।**

एतदार्याभिषेकेण कुलं नो नष्टकल्मषम् ।
पुनः प्रकाशतां याति सोमस्येवोदये जगत् ॥११॥

**रामः ।** वत्स लक्ष्मण, अधिगतराज्योऽहमस्मि ।

**लक्ष्मणः ।** दिष्ट्या वर्धते भवान् ।

**काञ्चुकीयः** प्रविश्य । जयतु महाराजः । एत खलु विभीषण-सुग्रीवनीलमैन्दजाम्बवद्धनूमत्प्रमुखा अनुगन्तारो विज्ञापयन्ति । दिष्ट्या भवान् वर्धत इति ।

**रामः ।** सहायानां प्रसादादिति कथ्यताम् ।

**काञ्चुकीयः ।** यदाज्ञापयति महाराजः । निष्क्रान्तः ।

**कैकेयी ।** धण्णं खु इमं अब्भुदअं अओज्झाअं पेक्खिदुं इच्छामि॥
धन्यं खलु इमम् अभ्युदयमयोध्यायां द्रष्टुमिच्छामि ।

**रामः ।** द्रक्ष्यति भवती । अये, प्रभाभिर्वनमिदमखिलं सूर्यवत् प्रतिभाति । आम्, संप्राप्तं पुष्पकं विमानं कृतसमयम् । तत् सर्वैरारुह्यताम् ।

सर्वे आरोहन्ति ।

**रामः ।** हन्त,

अद्यैव यास्यामि पुरीमयोध्यां
संबन्धिमित्रैरनुगम्यमानः ।

**सुमन्त्रः ।**

अद्यैव पश्यन्तु च नागरास्त्वां
चन्द्रं सनक्षत्रमिवोदयस्थम् ॥१३॥

निष्क्रान्ताः सर्वे ।

**इति सुखोदर्को नाम सप्तमोऽङ्कः ।**

---

(ततः प्रविशति सूत्रधारः ।)

**सूत्रधारः ।** जयतु देवः । जयतु महाराजः ।

यथा रामश्च जानक्या बन्धुभिश्च समागतः ।
तथा लक्ष्म्या समायुक्तो राजा भूमिं प्रशास्तु नः ॥१५॥

(निष्क्रान्तः ।)

**इति समापना ।**

**समाप्तं श्रीमद्भासप्रणीतं**

**प्रतिमादशरथम् ।**

## असाधारणाः शब्दाः ।

अकल्य वि० અસ્વસ્થ, બીમાર.

अङ्ग અવ્ય, અરે.

अतिक्रान्त वि० ગત, મરી ગયેલું.

अतिसंधित वि० છેતરાયલું.

अननुभूत वि० ન વપરાયલું, કોરૂં.

अनियतात्मन् वि० સંયમરહિત, વિષયભોગમાં મગ્ન.

अनुक्रुश् प्रे० દાઝ જણાવવી, દાઝ ખાવી.

अनुगन्तृ पुं० અનુયાયી.

अनुचर् ૧ પરસ્મૈ૦ સેવવું.

अनुनय पुं० સમજાવટ.

अनुयात्र न० (૧) વળાવવું તે; (૨) જોડે જવું તે, સાથે રહેવું તે; (૩) સાથે રહેનાર, જોડે જનાર.

अनुसंवत्सर श्राद्ध સંવત્સરી, છમછરી.

अन्तशः અવ્ય. પૂરેપૂરી રીતે.

अन्धकार वि० શ્યામ, કાળું.

अप्रकृतीभूत वि० બેમુદ્દાસર.

अप्रभुत्व न० નબળાઇ, લાચારી.

अप्रमित वि० અપાર.

अप्रमेय वि० (૧) અતર્ક્ય, અપાર; (૨) ઓળખાય નહિ એવું.

अभिजुष ૬ આત્મને. અનુભવવું, માણવું, ભોગવવું.

अभिसारि स्त्री० ચડાઇ, વિગ્રહ.

अभ्युदय पुं० ઉત્સવ.

अमन्त्रोक्त वि० મંત્રોચાર રહિત, મંત્રના ભણતર વગરનું.

अर्ह वि० યોગ્ય, અપેક્ષ્ય.
अवगुण्ठन न० શણગટ.
अवसित वि० (૧) સમાપ્ત; (૨) હણાયલું, મરાયલું.
असुमुक्त वि० પ્રાણ રહિત, મરણ પામેલું, મૃત.
आगम पुं० જ્ઞાન.
आप्रच्छ् १ ઉભય. છૂટા પડતાં રજા લેવી.
आभाष् १ આત્મને૦ સંબોધવું, બોલાવવું.
आलब्ध वि० આહત, વગાડાયલું ( struck, beaten )
आवर्त पुं० ઝાડના મૂળમાં પાણી સીંચવાનો ક્યારો.
आविष्कृत वि. પ્રત્યક્ષભૂત, પ્રગટ થયેલું.
आसन न० શરીરની અવસ્થા; સ્થિતિ.
आह्वे १ પરસ્મૈ૦ સંબોધવું, બોલાવવું.
इष्टतः અવ્ય૦ મનપસંદ રીતે.
उच्चारण न० ઊપાડવું તે, ઊંચકવું તે.
उत्थापन न० ઊંઘમાંથી ઊઠવું તે, જાગવું તે.
उद्घात पुं० (૧) વિઘ્ન, અંતરાય; (૨) પ્રસંગ.
उप અવ્ય. પાસે, નજીકમાં.
उपसृज् ६ પરસ્મૈ. સાથે લેવું, સાથે રાખવું, સજવું.
कल्प પું૦ શ્રાદ્ધવિધિ.
काञ्चुकीय પું૦ કંચુકી, રણવાસનો મુખ્ય અધિકારી.
कालसंवादिन् વિ૦ પ્રસંગ યોગ્ય, પ્રસંગને અનુકૂળ.
कुटुम्बिन्, कुटुम्बिक } પું૦ પતિ, વર.
कृतचेतस् વિ૦ સ્થિર મનવાળું, દૃઢ મનનું.
कृतान्त પું૦ દૈવ, વિધિ.
कृत्तिकाविषय પું૦ કૃત્તિકાનો પ્રદેશ, કૃત્તિકાનો કાળ.
क्रीडामयूर પું૦ પાળેલો મોર.

क्रौञ्चत्व न० ક્રૌંચ પર્વતની દશા.

क्लिद् પ્રે० ભીંજાવવું, દ્રવતૂં કરવું.

क्लिष्ट वि. (૧) પીડાયલું; (૨) મેલું, ઝાંખું.

क्लोमान्तर न० પિત્તાશયનો પ્રદેશ, પિત્તાશયનો ભાગ.

खेद પું० શ્રમ, મહેનત.

गर्ह् ૧૦ પરસ્મૈ० દિલગીરી જણાવવી, અપ્રીતિ બતાવવી.

गर्हित વિ० દિલગીરી બતાવાયલું.

गुण પું० સારો પરિણામ, લાભ.

चतुःस्तोम પું० ચારનો સમુદાય, ચતુર્વ્યૂહ.

जरा સ્ત્રી० તેજની ક્ષીણતા, ઝાંખાશ.

तद्वेलम् અવ્ય. તત્કાળ, તત્ક્ષણ, સત્વર.

तमौघ પું० અંધકારનો જથો.

तिक्त न० ધા કરવો તે.

दृष्टिक्षम વિ० નજર ઠારતૂં, આંખમાં ખૂંપે એવું.

देवकुल न० દેવળ, મંદિર.

देवकुलिक પું० દેવ થયેલા રાજાઓના પ્રતિમાગૃહનો પૂજારી, સેવક.

धनुःश्लाघा સ્ત્રી० ધનુર્વિદ્યાની ખ્યાતિ.

धरमाण વિ० જીવતૂં, હયાત, વિદ્યમાન.

नन्दिपटह પું० મંગળ દુંદુભિ.

नाटकीय પું० નટ, નાટક ભજવનાર.

नान्दी સ્ત્રી० પૂર્વરંગનૂં એક અંગ.

निघृष्ट न० વતરડવૂં તે.

निभृत વિ० (૧) મૌન ધરીને રહેતૂં, મૂગૂં; (૨) સ્થિર.

निभृतधीमत् વિ० સ્થિર બુદ્ધિવાળું, સ્થિતપ્રજ્ઞ.

नियत વિ० સંયમ પાળતૂં.

नियम પું० વ્રત.

नियमप्रभविष्णुता સ્ત્રી० વ્રતાચરણનો ધારો.

निर्मनस्कता स्त्री० सूनकारपणुं.
निर्योग पुं० शणुगार.
निवपन न० श्राद्धविधि.
नेपथ्यपालिनी स्त्री० वस्त्रभंडारनी अधिकारिणी, जामदारखानानी
ऊपरी बाई.
नैत्यक न० नित्यपूजा.
न्यङ्ग वि० नीच, अधम.
परिभोग पुं० भोगवैभव.
परिव्राजक पुं० संयम पाळतो संसारी के त्यागी पुरुष.
पितृमत्ता स्त्री० बाप जीवतो होवो ते.
पितृमत्त्व न० ,, ,, ,, ,,
पुरस्कृ ८ उभय. आगळ करवुं, संबंधमां बोलवुं.
पूजा स्त्री० पितृपूजन, श्राद्ध.
पूर्वतमम् अव्य. बहु पहेलां, घणा वखत उपर.
प्रणाश पुं. खोई बेसवुं ते, अपहरण.
प्रतिपद् प्रे० आपवुं, बक्षवुं.
प्रतिमा स्त्री० गत राजानी आबेहूब मूर्त्ति.
प्रतिव्यूह् १. परस्मै. सामे युद्धमां ऊतरवुं.
प्रतिहार पुं० बारणुं, द्वार, देढी
प्रयोजन न० उपयोग.
प्रश्च्योतिन् वि० टपकतुं, गळतुं
प्रियाख्यानक न० वधामणी.
बल न० जोरावरी, बळजोरी.
भद्रासन न० तख्त, सिंहासन.
भव पुं० सुख.
भवतु अव्य. (१) अस्तु, भले; (२) बस करो, बस.
भाव पुं० प्रीति.

मन्यु પું० (૧) શોક; (૨) ક્રોધ.

मातृगोत्र ન० માના નામ ઉપરથી પાડેલું નામ

मार्गात् અવ્ય. વચ્ચેથી, અધવચથી.

मुखराग પું० મ્હોનો વર્ણ.

मोक्षित વિ० મુક્ત કરાયલું, છોડાવાયલું.

यान પું०न० માર્ગ.

युगक्षय પું० અવાંતર પ્રલય, પ્રલય.

राज्यफल ન० રાજ્યની ઊપજ, ભંડાર, ખજાનો.

राहुदोष પું० ગ્રહણ.

रोदितव्य काल રડારોળનો વખત.

लब्धप्रिय વિ० જેનું પ્રિય કરાયું છે એવું.

वध પું० વણસાડવું તે, નાશ.

वनौकस् પું० વાનર.

वर्ण પું० પ્રશંસા, વખાણ.

वसन ન० રહેવું તે, વાસ.

वा અવ્ય. ઇત્યાદિ.

वार्षल વિ० શૂદ્રની રીતનું.

वालखिल्य પું० वृहत् पराशरसंहिताમાં વાનપ્રસ્થના ચાર પ્રકાર ગણાવ્યા છે, તે પૈકી એક. એ ચારનાં નામ वानप्रस्थ, उदुंबर, वालखिल्य અને वनेवासिन्.

विपुष्प् ૪ પરસ્મૈ. ફૂલ રહિત બનવું.

विपुष्पित વિ० ફૂલરહિત બનાવાયલું, જેનાં ફૂલ ચૂંટાયાં છે એવું.

विमर्द પું० યુદ્ધ, સંગ્રામ.

विमर्श પું० વિચારણા, તપાસ.

विलय પું० નાશ.

विशिष्टि સ્ત્રી० વિશિષ્ટતા, ખાસ અધિકાર.

विशेषार्थ પું० વિશેષભૂત પદાર્થ, ખાસ ચીજ.

विशेषित वि० અસાધારણ લક્ષણવાળું, ભવ્ય.

वैखानस પું० જુઓ वालखिल्य.

शताकीर्ण न० સેંકડોની ભીડ.

शल्क न० ઝાડની છાલ.

शाल्क न० ઝાડની છાલનું વસ્ત્ર, વલ્કલ.

श्रद्धेय વિ० પ્રીતિપાત્ર, વ્હાલું.

श्रम् ૪ પરસ્મૈ. શ્રમ ઊઠાવવો.

संवेधन न० વીંધી નાખવું તે.

संवेशन न० સૂઈ જવું તે, ઊંઘવું તે.

संदानक न० દોર, તાંતણો.

समापना સ્ત્રી० આશીર્વાદવાળો નાટકની સમાપ્તિનો ભાગ.

समुद्रगृह न० જળમંદિર; જુઓ **સ્વપ્નની સુંદરી**, પૃ. ૬૧, ટિપ્પણી ૧૨૨.

समुदाचार પું० (૧) આચાર; (૨) શિષ્ટ મર્યાદા; (૩) પૂજન.

सहज પું० ભાઈ.

सादन न० ઘર.

साहस न० દંડપાત્ર અપરાધ.

सिद्धि સ્ત્રી० (૧) તપની સમૃદ્ધિ; (૨) પરમ પદની પ્રાપ્તિ.

सुखोदर्क પું० સુખમય પરિણામ, શુભ પરિણામ.

सुधाकार પું० ધોળી ઝાડી સાફ કરનાર મજૂર.

सूर्यवत् વિ० સૂર્યવાળું, જ્યાં સૂર્ય ભગવાન ઊતરી આવ્યા હોય એવું.

सोपस्नेहता સ્ત્રી० ઘટ્ટ છાયા હોવી તે, ઘટાદારપણું.

सौभ्रात्र न० ભાઈ તરીકેની લાયકી.

स्थापना સ્ત્રી० નાટકની પ્રસ્તાવના.

स्फुर् ૬ પરસ્મૈ. ધબકવું, ધડકવું.

हव्य न० ઘૃત, ઘી.

# દીવાનબહાદુર કેશવલાલ હર્ષદરાય ધ્રુવે

## પ્રસિદ્ધ કરેલાં પુસ્તક.

| | | |
|---|---|---|
| મેળની મુદ્રિકા ( मुद्राराक्षस ) | આ. ૬ | રૂ. ૧—૮—૦ |
| પરાક્રમની પ્રસાદી ( विक्रमोर्वशीय ) | આ. ૬ | ૧—૦—૦ |
| વિંધ્યવનની કન્યકા ( प्रियदर्शना ) | આ. ૩ | ૦—૧૫—૦ |
| સ્વપ્નની સુંદરી ( स्वप्नवासवदत्त ) | આ. ૨ | ૦—૧૫—૦ |
| પ્રધાનની પ્રતિજ્ઞા ( प्रतियौगन्धरायण ) | આ. ૨ | ૦—૧૨—૦ |
| પ્રતિમા ( प्रतिमादशरथ ) | આ. ૧ | ૧—૪—૦ |
| મધ્યમ ( मध्यमक ) | બૉંડપટી | ૦—૧૦—૦ |
| | કાગળ | ૦—૧૦—૦ |
| ગીતગોવિંદ | આ. ૫ | ૨—૦—૦ |
| લઘુગીતગોવિંદ | આ. ૧ | ૧—૧૨—૦ |
| અમરૂશતક* | આ. ૪ | ૧—૪—૦ |
| બાણકૃત કાદંબરી પૂર્વભાગ* | આ. ૧ | ૪—૦—૦ |
| मुद्राराक्षसम् ।* | આ. ૨ | ૪—૦—૦ |

સોલ એજંટ

**બુકસેલર મહાદેવ રામચંદ્ર જાગુષ્ટે**

ત્રણ દરવાજા—અમદાવાદ.

---

* સિલકમાં બહુ થોડી નકલ છે.